# शिव निर्वाण शतकम्





रचयिता

**जगन्नाथ रिबू शास्त्री**

भट्टयार आली कदल

श्रीनगर (२) काश्मीर

प्राक्कथनम्

श्रीनगरी
२९-७-१९७१

डा० बलजिन्नाथ पण्डितः
शास्त्री एम० ए० एम० ओ० एल०
पी० एच० डी०



# विषय सूची

## " श्री शिवनिर्वाणशतकम् "

# प्राक्कथनम्

भारतवर्षे संस्कृतभाषा वाङ्मयमतीव समृद्धमस्ति । तत एव प्राक्तनायां तत्तद्देशभाषा भक्तैः सुजनैः संस्कृतवाङ्मयवाटिकापुष्प-भूतानां केषांचित् शास्त्राणाँ स्वस्वदेशभाषायामनुवादस्तत्र कृतः । तैश्चानुवादैः सा सा देशभाषा समृद्धिं प्राप्ता ।

सन्ति देशभाषास्वपि तथाविधानि रहस्यवादादिभरितानि काव्यानि यथाविधानि संस्कृतवाङ्मये नेदानीं लभ्यन्ते ।

ततो वर्तमाने युगे देशभाषा वाङ्मयस्यसंस्कृतभाषायामनुवाद-करणं प्रति विदुषां प्रवृत्तिर्जाता ।

महाराष्ट्रभाषाकाव्यानां संस्कृतानुवादः प्रायः संस्कृतपत्रिकासु प्रकाश्यन्ते । स्वतन्त्रग्रन्थरूपतयापि केषांचित् तेषां काव्यानां मुद्रणं प्रकाशनं च सम्पन्नम् ।

प्रस्तुते च ग्रन्थे श्रीमद्भिर्जगन्नाथरिवूशास्त्रिभिः काश्मीर भाषावाङ्मयस्य कासांचित्सुन्दराणां रचनानामनुवादं विद्वद्भिः संस्कृतभाषायां च वर्तमाने युगे प्रसिद्धान् भावाननुसृत्य नूतनाकाव्य-रचनाश्च कुर्वद्भिर्महतोमहिमामयी सेवा क्रियते संस्कृतवाचः । यत्नोऽयमेतेषां शास्त्रिमहोदयानां सफलः स्यादित्याशास्महे वयम् ।

लोकाश्चापि यत्नमेतेषां प्रशंसन्त्वभिनन्दन्तु चेति प्रार्थयामः । तदित्थमभिनवैः प्रकारैः संस्कृतवाग्देवतायाः पूजां कुर्वन्तः श्री-जगन्नाथशास्त्रिणः सत्यं सुधन्याः

श्रीनगरी
२९-७-१९७१

डा० बलजिन्नाथ पण्डितः
शास्त्री एम० ए० एम० ओ० एल०
पी० एच० डी०

# [ भूमिका ]

## श्रूयते

पुरा किल काबुलदेशनिवासिभिः पठान (खां) शासकैः कश्मीरदेशे राज्यं कृतम् । तस्मिन्नेव कालेऽस्यां कश्मीर-वाटिकायां तूलमूलग्रामान्तर्गतश्रीमहाराज्ञ्यः पादमूले स्वर्गीयो लभीजीवाख्यस्तपस्त्यागमूर्तिर्महायोगी तपश्चकार ।

तस्य शिष्यः स्वर्गीयो गोविन्दजीवाख्यो रजगरीजात्यंकितः श्रीनगरान्तर्गतपुरुषयारनिवासी कोऽपि गृहस्थी बभूव ।

स पठानशासकैः स्वराज्यकार्यसंचालनाय काबुल प्रदेशं नीत्वा तत्र प्रधानमन्त्रिपदे नियुक्तः ।

काबुलशासकैः केनाप्यपराधेन तत्र स अन्धकूपे निपातितः ।

अन्धकूपनिपतितोऽसौ गोविन्दजीवो घोरां विपत्तिं गतः सन् स्वं गुरुं लभीजीवं सस्मार ।

स्वगुरुकृपया कश्मीरभाषायां शिवशंकर भवभयहरहरलगयो चरणन्" एषा शिवनिर्वाणस्तुतिस्तस्य वैखर्यां प्रादुरासीत् ।

स्वगुरुकृपया स पठानशासकैस्तस्मादन्धकूपान्निष्कासितः ।

द्वाविंशतिपद्यात्मकोयं "शिवनिर्वाणप्रदो दुःखशोक संतापहरो निबन्धो मया संस्कृतपद्येषु ' भुजङ्गप्रयातं छन्दसानूदितः ।

यद्यपि निबन्धोऽयं त्रुटिबाहुल्याद्विदुषां समीपे मम मन्द प्रज्ञत्वं सूचयति तथापि महानुभावा विद्वांसो मदीयत्रुटिषु ध्यानमदत्वा केवलं मदीयचाञ्चल्यपूर्णमानसिकमर्कटोत्प्लवं गताया रसास्वादमवश्यं करिष्यन्तीति । येन मदीयपरिश्रमस्य कृतार्थता भविष्यति । विदुषां मनोविनोदः संतोषश्च जायते ।



—जगत् रविः

ॐ

# विनायक वल्लभा

ॐ विश्वं व्याप्य स्थितो यः सुरवरगुरुणाभ्यर्चितोब्रह्मणाद्यै
सृष्टेः संस्थापनार्थं विविधमुनिवरैः पूजितो योगसिद्ध्यै।
दाता सर्वाः समृद्धीर्हरिहरनमितः पार्वतीप्राणभूतो
हेरम्बः पातु सोऽस्मान्द्विपवरवदनः सिंहयुग्माधिरूढः ॥१॥

यो विश्वात्मा प्रणववपुषालंकरोतीह शुण्डं
पूर्णाहन्तां वहति स बहिर्वारणेन्द्रस्य रूपात्।
कूटाहन्तां नयति विलयं मूषकस्याधिरूढो
विश्वामोदं वहति च करे मोदकैः पूर्णपात्रम् ॥२॥

विघ्नान् हतुं वहति सुकरे सूक्ष्मविद्याकुठार
मात्मस्थं तं स्मरति पुरुषं चाक्षमाला निवेशात्।
हस्ते दन्तं वहति विमलं लेखनी ग्रन्थनाय
सो नः पायाच्छिवपदरतः सृष्टिबीजो गणेशः।३।

रागद्वेषं हरति सहसा यज्ञसूत्रद्विजिह्वं
भलि बालं श्रयति च विधुं मानसोनिर्मलत्वम्।
भ्रूमध्ये यद् वहति नयनं ज्ञानविज्ञानबीजं
पायान्नोऽसौ शशिशकलधृक् पार्वतीशान सूनुः ॥४।

यं पूजादौ श्रयति विभवं पूजकः पूजयित्वा
योगज्ञा यं हृदयकमले ध्यानगम्यं स्मरन्ति
वामे भागे वहति सततं वल्लभां यः स्वकीयां
भूयोभूयः सकलजगतां तं सुनाथं नमामि ।५।

स्मारं स्मारं प्रणववपुषं चैकदन्तं शरण्यं
ध्याय ध्यायं प्रकटसवितुर्व्योम्निदेवस्य भर्गः
यन्नो ध्येयं गुरुवर मुखाच्चोदनाद्वै वरेण्यं
तत्सद् ध्याये हृदयकमले बोधरूपं स्वरूपम् ॥६॥

सुरभिमधुरां झंकारैर्यः सदा सुमनः प्रियां
सुभगपुरुषो गायन् रागैर्मधोरिव षट्पदीम् ।
मधुप इव वं कृष्णां मूर्ति दधत् कमलाश्रियां
हृदयकमले देवं ध्यात्वा समाश्रयति श्रियम् ॥७॥

—:o:—

जगन्नाथ कृता सैषा विनायक युगे रवौ
विक्रमे नवखर्विंशे शुक्ले सिंहे रवौ गते । ८ ।

(१) प्रथम श्लोकस्य टिप्पणी—

रभि धातोः नुम् विधानात् रम्भ इति सिद्धिः । हे रम्भ. शब्दब्रह्मरूपः । प्रणवः परंब्रह्म ।

सिंहयुग्भाधिरूढ़ः ॥
प्राणपानसञ्ज्ञौ द्वौ सिंहौ
ययोर्निग्रहः सिंहनिग्रहतुल्यः ॥

समाप्तम् !



# मङ्गलाचरणम्

(क)

## संस्कृत

श्रीः शारदाब्जनयना शरदिन्दुशुभ्रा
भासा स्वया हरतु नो हृदयान्धकारम् ।
या मौलिभिः सुरवरैर्विहितप्रणामा
ज्ञानार्थिभिर्मुनिवरैः सततं विचार्या ।।१।।

प्रपन्नपारिजाताय - ज्ञानमुद्राक्षपाणये ।
जगत् कल्याणसक्ताय नमः शान्ताय तेजसे ।।२।।

त्वमेव माता च पिता त्वमेव
त्वमेव बन्धुश्च सखा त्वमेव
त्वमेव विद्या द्रविणं त्वमेव
त्वमेव सर्वं मम देवदेव ।।३।।



# संस्कृत

(क)

१ नमामीशमीशाननिर्वाणरूपं - शिवं शंकरं जन्ममृत्योर्भयादीन् ।
हरं शापपापे भवं सच्चरित्रं-सदा सद्गुरोः पादपद्मं भजेऽहम् ॥१॥

२ तदीयं सदा पादपद्मं शरण्यं - वरेण्यं वदान्यं वराणां प्रदं च ।
मलं स्वान्तजं यन्निहन्ति स्मृतं तत्करस्यावलम्बं सदा मे करोतु ॥२॥

यमस्यापि भीतिं हरेद्याहिप्रीत्या, सदा जन्ममृत्योर्भयं चापि हन्ति ।
नमस्येऽमरेशं भजे तस्य पादौ, जगत्पालकःपालनं मे करोतु ॥३॥

जगन्कालहर्ता भवेत्तस्यपादः सदा भेदशून्यस्तदीयं चरित्रम् ।
पवित्रं स्वदृष्टेः पथिस्थ करोमि-नमामीशमीशाननिर्वाणरूपम् ॥४॥

३ प्रभोदीनबन्धो भवान् द्वतहीनो, दयां देव दीनाय मह्य करोतु ।
स्मरिष्ये त्वदीयं चरित्रं सदाहं, गमिष्यामि शम्भो पदं ते हसञ्च ॥ ५ ॥

मदीयान्विरावान् तथा दीनवाच, श्रृणु त्व स्वकर्णेन हे दीनबन्धो !
भय मे शरीरे महञ्जर्णतायां, भवेत्तन्न जीर्णं प्रभोत्वत्प्रसादात् ॥६॥

अहं मोहमग्नो भवान्मोहहर्ता, महामोहनिद्रा यथा पूर्वकाले ।
मुनीनां प्रनष्टा तथेयं त्वदीया, त्प्रसादाद्विनाशं स्वयं मे प्रयातु ॥७॥

मनस्तुष्टिदं देहपुष्टिप्रदं च, भजे देवजुष्टं भजे दुर्जनघ्नम् ।
अहं तं महेशं वदान्यं शरण्यं, भजे शान्तिदं स्वं शरीरं समर्प्य ॥८॥

संस्कृत



(ख)

४ अनन्तस्य पारं बभूवुर्न सन्ताः, परास्ता भवन्तीह सर्वेविचिन्त्य।
स वेदान्तविन्निश्चयं किं नु कुर्याद् भवन्तीह वेदाः सदा मार्गशान्ताः ॥९॥

गतो मोहजाले विरिञ्चिः सदेवैः, कथं ते वदेयुः स तत्सत्स्वरूपम्।
सदा भातु मेऽन्तः स तत्सत्स्वरूपः, स मे ज्ञानमार्गं प्रशस्तं करोतु ॥१०॥

मुनीनां स्वसिद्धाः सदा शुद्धमार्गाः, प्रभश्शापहर्ता भवेन्निश्चयो मे।
सदा शापमुक्तिप्रदां ज्ञानदां तां, नमाम्यार्यदृष्टिं स्वदेहं समर्प्य ॥११॥

५ स तेजः स्वरूपः स्वयं ज्योतिराख्यः, स सोमाग्निसूर्यादिरूपैर्विभाति।
स्वभावानुगम्यः प्रकाशस्वरूपः स्वतेजो बभौ ज्ञानिनां हृद्बिले सः ॥१२॥

स भाति स्वयं योगिनां हृद्गुहास्थः, स तेजोवरेण्यः स्वयं मे विभातु।
ऋजुं देव! मे त्वं स्वकर्मादिसेतुं, कुरुज्ञानगम्यं विदेहस्य यद्वत् ॥१३॥

भवाँश्च ज्ञानरूपः सदा ज्ञेयविज्ञौ, तव ज्ञानदृष्टेर्विना किं नु जाने।
भवेऽस्मिन्स्वज्ञानोपदेशं प्रशाधि, कुरु त्वं ममाज्ञाननाशं सदैव ।१४।

६ त्रिधा कारणानां सदा कारणं त्वं, स्थितः कारणाच्च विमुक्तो विभासि
त्रिधा सस्थितैः कारणैस्त्वं करोषि, जगत्सृष्टिरक्षेलयं चैव नित्यम् ॥१५॥

जगत्कार्यकर्ता स्वयं लोकभर्ता, जगद्भारहर्ता त्वमेव त्वमेव।
स्वयं व्याप्य भावान् अखण्डः स्थितस्त्वं-स्वयं भूर्भुवः स्वः स्वयं व्यापकस्त्वम् १६

अहं किं वदेयं भवान्कोऽस्ति देवो, जनैर्ज्ञानहीनैर्न ज्ञातस्वरूपः।
दया ते कृपा ते स्वरूपप्रतिष्ठा, भवेऽस्मिन्भवेन्मे प्रभो! ज्ञाननिष्ठा ।१७।

# संस्कृत

(ग)

७ प्रभो ! सत्यमूर्ते ! सुरैः पूजितस्त्वमहं पूजनीयां विधिं चावलंब्य ।
समर्चे भवन्तं सदा सत्यभावैर्यथा पूजितो विष्णुना पूर्वकाले । १८ ।

कदा केसरैः पद्मपुष्पैः प्रफुल्लैरहं भावपुष्पैश्चमालां करिष्ये ।
तथा सन्मनोभावयुक्तं सपत्रं, शिरोभूषणं ते करिष्ये सुगुच्छम् ॥१९॥

सुहृद्भावविश्वासयुक्तैः सुपुष्पै रहं पादपद्मं समर्चे त्वदीयम् ।
स्वपादस्य मूले प्रभो! पालय मां, हरन्विघ्नसङ्घान् तथा शापपापे । २०॥

८ शिवो निर्मलश्शुद्धबुद्धः पवित्रो, मनश्शुद्धिदो ध्यानगम्यो महीयान् ।
सदा स्फाटिकाभं भवेत्तस्य भक्त्या मनो मे विकासं भवेदीशमूर्त्या २१॥

तमोरूपकं वासुकिं यो दधानः श्चिदात्माशिवो नीलकण्ठः स पातु ।
सुधाधारया गगया शोभते यो, यया तारिता पातकाद् भारतीयाः ॥२२॥

शिवा वामभागे बभौ चेतनस्य, स्वचिच्छक्तिरूपा स्वयं भासमाना ।
वृषो धर्मरूपस्त्रिशूलः करे योऽप्यवस्थात्रयस्य व्यवस्थां करोति ॥२३॥

९ तनौश्वेतभस्माङ्गरागः ससत्वो, गुणश्शीतसौन्दर्ययुक्तो विभाति ।
गले रुण्डमाला धृता निग्रहाय, तथा स्वेन्द्रियाणां मनोजस्य शान्त्यै ।२४

जटा राजते देवदेवस्य मौलौ. रजो व्याजबद्धो मदीयो विचारः ।
मनश्शुद्धतां यो ललाटे व्यनक्ति, स चन्द्रस्तमस्तापहर्ता जनानाम् । २५ ।

स दिग् वस्त्रधारी स निर्वासनानां, वसन्यः सदा मानसे सज्जनानाम् ।
त्रिधा संस्थितैः कारणैः स त्रिनेत्रस्त्रिधाम्नि स्वयं राजते ज्ञानबुद्धयोः ।२६।

# संस्कृत

(घ)

१० स मायामतीतो गुणैर्यस्यमाया, विकासं प्रयाता त्रिभिर्निर्गुणश्च ।
स मायागुणैः कीडति कीडनस्थो विकासं गतोऽसौ स्वयं कर्मनिष्ठः ॥२७॥

मनोबुद्ध्यहंकारयुक्ते शरीरे, सदा पञ्चभूतेन्द्रियप्राणसङ्घे ।
स्वयं भूतनाथः सदानन्दरूपश्चिदात्मा गतो जीवभावं महेशः ॥२८॥

स जीवो बलं प्राकृतं प्राप्य देहे, प्रलोभात्स्वदेहस्य जीवात्मभावम् ।
प्रयातो महामोहनिद्रां तदात्मा, स्वयं यो महीयान् स्वयं विश्वमूर्तिः ॥२९॥

११ स्वयं मोहजालस्य पाशं प्रसार्य, निबद्धो निजैः कर्मबन्धैः स जीवः ।
हृदि क्रोधलोभेन्धनैः कामवह्निः, प्रदीप्तः प्रचण्डो ध्रुव मोहसक्तः ॥३०॥

मनोबुद्धिचित्तेन्द्रियेषु स्थितिं सो, गतश्चेद् भवेद्रागवैरादिकानाम् ।
रिपूणां वशे पञ्जरस्थः सजीवो, गुणानां प्रसङ्गाद्वशाज्जन्ममृत्योः ।३१॥

करोत्यागतं स गतं चैव लोके, स्वयं पुण्यपापौघजाल प्रसार्य ।
शिवः केवलो मुक्त्युपायो जनानां, स मोक्षप्रदाता सदा भक्तिमद्भ्यः ।३२॥

स मे मोक्षदाता स मे भीतिहर्ता, शिवः केवलोऽसौ शिवः केवलोऽसौ ।
स्वयं राजतेऽसौ सदा राजहंसो, विराड् विश्वभुग् विश्वपो विश्वकर्ता ।३३॥

१२ विरिञ्चे! हरे! शंकर! श्रूयतां मे, प्रपञ्चादतीतः स्थितस्त्वं प्रपञ्चे ।
स्ववाञ्छा प्रजागर्ति मे भावगा या, त्वहं कर्णगां कं करिष्ये त्वदन्यम् ।।३४।।

त्वया पञ्चवक्त्रेण मुक्तिर्विना न, भवेज्जन्मजन्मंरतः तुष्यतात्माम् ।
मदीये शरीरे स्थिता पञ्चदेवा, वदिष्यामि किं तान्वद त्वं स्वयं हे ३५।

मदीयं मनश्चञ्चलं याति दूरं, महाघोरसंसारविघ्नाभिभूतम् ।
अनन्तस्य नाप्ता सुरैश्चापिसीमोपरिष्टादधस्तात्तथा सर्वतश्च ॥३६॥

तमेकं भजेऽहं सदा सुन्दरो यः, स मे दुःखहर्ता वरेण्यो वदान्यः ।
स्वयं भूतनाथो गणानां प्रणेता, सदा मे शरण्यो महाभूतिदोऽस्तु ।।३७॥

# संस्कृत

(ङ)

१३ समृद्धि प्रभो मे समां देहि येन, सदा संयमेनैव कालं नयेयम् ।
अवक्रा भवेत्तस्य कर्मस्यरेखा, समा चेद्दया स्यात्त्वदीया नरस्य ॥३८॥

गुणानां प्रसङ्गैस्तथा साधनैः सः, समाप्नोति सोमाद्रसं संग्रहीतम् ।
सदाहारयुक्तो विहारे समो यस्तथा स्वप्नजाग्रत्सुषुप्तेषु चैव ॥३९॥

स्थितो यः समायां स्वभावानुकूलो, धरायां समाविश्य योगी समाधिम् ।
स्वयं प्राप्नुयात्सद्गुरोर्वाक्ययोगात्समारूढयोगो भवेत्स महात्मा ॥४०॥

१४ स्वभक्तप्रियस्त्वं स्वभक्तिप्रदश्च, त्वमिच्छां स्वभक्तस्य नित्यं करोषि ।
स भक्तः स्वभक्ति स्वभावं समर्प्य, त्वदीयां सपर्यां सदैव करोति ॥४१॥

स्वभक्तेश्छलेन स्वभक्तेर्बलेन, स्वयं स्वेन्द्रियार्थाञ्जयेद्वै मनीषी ।
सदाश्रद्धया यस्तव ध्यानमग्नो, मनः प्राणबुद्ध्यीन्द्रियाणि प्रधार्य ॥४२॥

यमादीञ्छमादीन्स्वयं पालयित्वा, स्मरेद् यः सदा देवदेवं हृदब्जे ।
विदित्वा स सत्यं मनश्चैवजित्वा, पुनः सर्वलोकान्स गच्छेद्विजित्य ॥४३॥

१५ निवृतिं गतं यस्य संसारसिन्धो, मनश्चेद्धनैर्धान्यसंपत्तिवान्सः ।
उदासीनवत्कर्मभोगान्समश्नन्नसक्ता भवेत्तस्यबुद्धिर्गृहस्थे ॥४४॥

बहिःरागवान्सर्वकार्येष्वसक्तः, सदान्तर्विरक्तः पुनर्जन्ममुक्तौ ।
परित्यक्तकामो मुनिः सिंहतुल्यः, स संसारसिन्धो र्भवेत्पारगोऽत्र ॥४५॥

# संस्कृत

(च)

१६ कृपादृष्टिपात्रो भवेद्यः सुभक्तः, सुभाग्यैर्भवेत्साधुभिस्तस्य सङ्गम् ।
शुभाद्योऽशुभाद्द्वन्द्वभावाद् विमुक्तः, परित्यक्तदम्भो विकल्पैर्विहीनः ।४६।

तथा ज्ञानविज्ञानयुक्तो मुनीन्द्र, शमे वै दमे प्राप्तसर्वाधिकारः ।
सदा ब्रह्मलीनः परित्यक्तकामः, समाप्नोति सो जीवने ब्रह्मरूपम् ॥४७॥

यथा ब्रह्मरूपो लभीजीव संज्ञः, समाधिं गतः पादमूले भवान्याः ।
स्वयं शक्तिमान् स. स्वयं भक्तिमान् सः, चिदानन्द रूपश्शिवः पातु मां सः ।४८।

१७ निजात्मा प्रियो यस्य चेत्स्याद्भवेऽस्मिन्मनस्थं कुतर्कं त्यजेच्छुद्धभावैः ।
तमासाद्य देवं सुभक्त्या समर्चेत्, स्वकर्णौ नयेतां स्वयं साधुवाक्षु ॥४९॥

तदा साधुवाक्यैरवाप्नोति जाग्रदवस्थां स कालस्य कुर्वंन्प्रतीक्षाम् ।
शमाद्यैर्यमाद्यैर्नियम्य स्वभावं, स्वकालेऽर्गलानां भवेत्तस्य मुक्तिः ॥५०॥

दयालो कृपालो विना ते गतिर्न, सुहृत्सत्यभावं मदीयं विचिन्त्य ।
महानाश्रयो मे भव दीनबन्धो !, प्रशस्तं सुमार्गं मदीयं कुरु त्वम् ॥५१॥

१८ अहं कस्तदा ज्ञातवान्देवदेव, यदा चेतना मे गता जागृतिं ते ।
त्वदीया दया सेवकान्बोधयन्ती, यया बोधितोऽहं स्वयं सेवकस्ते ॥५२॥

यदि त्व स्वभक्तं विमुक्तं करोषि, तदाहं विमुक्तः सदा बन्धहीनः ।
स्वयं त्वं प्रकाशः स्वय नाशमुक्तः, सदा जन्ममृत्योरतीतस्तवमेव ।५३॥

सदा चित्स्वरूपः सदानन्दरूपः स्थितोनिर्गुणस्त्वं सदा स्वस्वरूपे ।

त्वदीया दया यत्र सत्यार्थरूपा, मदीये प्रलापे भवेत्तत्र कोऽर्थः ॥५४॥

# संस्कृत

(छ)

१९ सदा शान्तरूपः सदा निर्मलस्त्वं, सदाशा हृदब्जे स्थिता मे त्वदीया।
प्रलापाञ्च मे सारयुक्तान् कुरु त्वं, शिव! त्वं स्वदृष्टिं शुभां मे प्रयच्छ।५५

अभाग्यात् विदास्ये शुभं त्वं स्वनाम्ना, शुभां दृष्टिमेकां प्रयाचे भवन्तम्।
प्रदाता शुभानां शुभानां च सारस्त्रिलोकेषु। सौन्दर्ययुक्तः सदा त्वम्।५६।

सुशोभां विधास्ये च ते पुष्पवृष्ट्या, तया ज्ञानसंपद्भवेच्छोभनीया।
यया शोभनीया भवन्तीह लोकाः, सुशोभा दया ते भवेत्सा सदा मे॥५७।

२० सदा नाशहीनं पुनर्जन्ममृत्योर्विनाशाय नित्यं भजे तं सुभक्त्या।
तदाशा स्थिता पूर्णरूपेण चित्ते, सदाशां सदा पूरयेन्मे दयालुः॥५८॥

स मृत्योर्मुखान्मे फलस्येव बन्धात्सुपक्वस्य मुक्तिं प्रभुर्मे ददातु।
तमः स्वप्रकाशं सदा चित्प्रकाशं, भजे नेत्रयोर्ज्ञानदं तं प्रकाशम्॥५९॥

पुनर्जन्ममृत्योर्भयं स्वं निहत्य, तथा वासनानां प्रशान्तिं च नीत्वा।
प्रकाशस्य योऽसावुदेति प्रकाशः, स शान्तः प्रकाशः सदा मे विभातु।६०॥

गुरूणां प्रसादः प्रपूर्णो भवेन्मे, प्रभो! दीनबन्धो! कुरु मां सुपात्रम्।
महामोहनिद्राविनाशं करं तं, शिवं शंकरं सद्गुरुं स्वं भजेऽहम्॥६१॥

२१ भवेऽस्मिन्नसारा सदा लोकयात्रा धनं पुत्रपौत्रास्तथा भ्रातृवर्गाः।
गृहं स्त्रीजनो बन्धुवर्गश्च सर्वमसारः सदा भ्रान्तिरूपो विभाति।६२।

सतृष्णस्य तृष्णा यथा सा मृगस्य, शिव! त्वं मदीयः स्वयं पुत्रपौत्राः।
स्वयं भ्रातृबन्धू तथैव कुटम्भः, पिता त्वं च माता गृहस्थे सुसंपत्।६३।

धनं त्वं च लोके स्थितं यच्च सारं, सहायो भव त्वं सदा मे दयालो!।
नमामीशमीशान निर्वाणरूप, शिवं शंकरं सद्गुरुं स्वं भजेऽहम्।६४।

## संस्कृत

(ज)

२२ न मे देवलोकस्य लोभो भवेऽस्मिन्न मे पातकस्यापि क्षोभः कदाचित् ।
शुभं वाशुभं यद्भवेत्कर्ममार्गे, स्वकर्मानुसारं फलं तद्भवेन्मे ॥६५॥

सुखस्याथ दुःखस्य भुञ्जे फ़लं तत्, स्वनाम्ना हरस्य भयाद् यान्ति दूरम् ।
यमस्य स्वय किंकरास्ते सदंव, शिवस्य स्वभक्तो भवेद् यो महात्मा ॥६६॥

सहायं निजं तस्यदेवाः स्मरन्ति, तदोया शुभा दृष्टिवृष्टिर्भवेच्चेत् ।
महासपदो लक्षलक्ष्मीः प्रदात्री, भवेत्स्वर्गसापानमार्गे सहाया ॥६७॥

शिव! त्वं कुरु स्वां स्वदृष्टि दयार्द्रां, वृणीष्व स्वयं मां प्रभो! दीनबन्धो ! ।
कृपादृष्टिपातैर्भवेयं सुधन्यः, क्षतिः का भवेत्ते प्रभो! पालनें मे ॥६८॥

२३ नवानां च नाथेश्वरस्त्वं मदायो, नवत्वं निधानानि सत्तेवकाय ।
नवानां निधीनां पतिश्च स्वयं त्वं, नवीनात्सदा नूतनस्त्वं विभासि ॥६९॥

त्वयाहं भवेयं सदैव नवीनो, गृहीत्वा नवद्वारपालान्यथाहम् ।
निग्रह्येन्द्रियार्थान्सदोमुच्चरेयमहं त्वत्स्वरूपे निमग्नो भवेयम् ॥७०॥

दिक् पालवृन्दैर्दशभिर्मुनीन्द्रैर्गन्धर्वविद्याधरसिद्धसङ्घैः ।
स्थितो हृदब्जे भव मे महेश, निघ्नन् मदीयान्बहुविघ्नवृन्दान् ॥७१॥

नवदुर्गा नवधारा, वाहिनीभक्तिसैन्धवी ।
करोतु पक्षपातं मे क्लेशपाशविमोचिनी ॥७२॥

नवद्वारपुरात्सोहमुत्प्लुत्यखगवत्स्वयम् ।
नवनाथेश्वरं प्राप्य गमिष्यामि नवां पुरीम् ॥७३॥

# संस्कृत

(भ्क)

२४ खग इव नवभिः संशोभिताद्द्वारमार्गै
नवपुरमयदेहात्खे समुत्प्लुत्य यास्ये ।

अभिनवशिवगेहं नागगन्धर्वसिद्धै
र्बहुविधकृतमानः शापपापाच्च मुक्तः ।।७५।।

शारदांघ्रिसरोजस्य, मधुपो मधुपः सदा ।
शिवनिर्वाणदां भक्तिं जगन्नाथः समाप्नुयात् ।।७५।

सुपदानूदिता सैषा शिवनिर्वाणदायिनी ।
शिवपादमधुपानमनोभ्रमरपद्मिनी ।।७६।।

इदं स्त्रोत्रं महापुण्यं, शापपापविनोचनम् ।
यः पठेत्प्रयतः सोऽन्ते, शिवनिर्वाणमाप्नुयात् ।७७।।

ॐ

# अथ नवदुर्गा स्त्रोत्रम्

(ञ)

(1) गायत्री :

सच्चित्कला भगवती प्रथमं सुसूक्ष्मा विद्योतते सुकृतिनां हृदये पराख्या ।
भर्गाख्यया सवितृमण्डलमध्यसंस्था सा बुद्धिचोदनपरा भवतु वरेण्या ।।

(2) मोक्षदा :

॰यन्ति यां सहृदया हृदये प्रभाते गायन्ति यां सुकवयो लकितैर्वचोभिः ।
॰ योगिनः सुहृदये परिशीलयन्ति तां मोक्षदां भगवतीं शरणं प्रपद्ये ।।

(3) दुर्गा :

शैलात्मजा कमलभूषितहंसयाना दुर्गा च दुर्गतिहरा भवनौ सुतारा ।
नारायणेन सुकृतैः स्मृतनामधेया विघ्नान्निवारयतु द्वादशषड् भुजाढ्या ॥

(4) वरदा :

हे वासुदेवसहजे! प्रतार्तिहर्त्रि ! हे नन्दगोपजयदे ! वसुदेवनीते ! ।
हे कंसराजदलिनि! श्रितव्योम मार्गे ! देवैस्तुते ! भगवति ! वरदे नमोऽस्तु ॥

(5) विन्ध्यवासिनी :

श्रीनीलकण्ठस्य हृतार्धकाया पद्मे सहस्रे धृतपद्मपादा ।
योगीन्द्रवर्यैर्विहितप्रणामा शैलात्मजा विन्ध्यनिवासिनी सा ॥

(6) शैलपुत्री :

पूर्णेन्दुवक्त्रा शरदिन्दुशुभ्रा भोगेन्द्रहारा नवद्विभुजाढ्या ।
सिंहाधिरूढा सुविशालनेत्रा सा शैलपुत्री भवतु प्रसन्ना ॥

(7) वेदमाता :

या षट् सरोजे च कृताधिवासा तारं जपन्ती प्रणवं प्रमोदात् ।
सार्धत्रिवृत्या च समुल्लसन्ती सा वेदमाता भवतु प्रसन्ना ।

(8) शारदा :

या चन्द्रभाला कमलासने स्वे विन्यस्य पादौ धृतकोणहस्ता ।
कुक्षौ दधाना च सुशुभ्रवीणा सा शारदा नो वरदा सदास्तु ॥

(9) पद्मधारिणी :

कुमारमाता द्विरदाननार्चिता शब्दात्मिका गद्यपदैरुदीरिता ।
उद्गीथबीजा प्रणवस्वरूपिणी सा पद्महस्ता भवतु प्रसन्ना ॥

10) (1) गायत्री (2) मोक्षदा (3) दुर्गा, ( ) वरदा (5) विन्ध्यवासिनो ।
(6) शैलजा (7) वेदमाता च, (8) शारदा (9) पद्मधारिणी ।

(11) नवद्वारमयेहर्म्ये, गीयतेऽहर्निशं बुधैः ।
हंसीवहंस सहगा, खेचरीखगगामिनी ॥

(12मूलाधाराद्विधंरन्ध्रे, संस्थिता कमलासने ।
नवभिर्गीयते पद्यैर्नवदुर्गाभयापहा ।

॥ समाप्तम् ॥

विनीतः जगत्० रविः

ओं

( गंगावतारः )

# रामनिकुञ्जगामिनी

(ट)

१ स्मारं स्मारं जनिमृतिभयं जातनिर्वेदवृत्ति
ध्यायं ध्यायं पशुपतिमुमाकान्तमन्तर्निषन्नम् ।
पायं पायं सपदि परमानन्दपीयूषधारां
भूयो भूयो निजगुरुपदम्बोजयुग्मं नमामि ॥

२ गंगापूरप्रचलितजटासृस्तभोगेन्द्रभीता
मालिङ्गन्तीमचलतनयां सस्मितंवीक्षमानः ।
लीलापाङ्गैः प्रणतजनता नन्दयञ्चन्द्रमौलि
र्मोहध्वान्तं हरतु परमानन्दमूर्तिश्शिवो नः ॥

३ कमण्डलौ या कमलासनेन संमानिता पूर्वमपूर्वतोया ।
त्रिविक्रमे विष्णुपदारविन्दं संपूज्य याता हरमौलिभागम् ॥

४ भगीरथः सागरगान्स्वपितृनुद्धर्तुं कामश्शिव संन्निधौ सः
आराधयामास सरिद्वरां तां हिमाद्रिदेशे पितृमुक्तिमत्यै ॥

५ संतुष्टचित्तस्य शिवस्यमौलेर्विनिर्गता पुण्यजला त्रिमार्गैः ।
मन्दाकिनी स्वर्गपथानुगामिना भागीरथी भारतपावनी सदा ॥

६ पातालगा भोगवती यशस्विनी या सप्तधा सप्तसरोवरे स्थिता ।
संपूजिताभूदृषिभिस्तुसप्तंभिः सापातु नो रामनिकुञ्जगामिनी ॥

७ कूर्मासनस्था मृगशावकाक्षी, चतुर्भुजा शोभितश्वेतवस्त्रा ।
धृताक्षमाला घटपद्ममुद्रा, दृष्टा मया रामनिकुञ्जगा सा ॥

८ भागीरथी पूतजला त्रितापहा, या भारतेभ्यो जयदायिनी सदा ।
संपूजिता भारतवासिभिर्मुदा, सा मेऽस्तु चान्ते शिवधाम दायिनी ॥

९ सदा पूता गंगा वितरति मुहुर्दर्शनसुखं
हिमाद्रेः सञ्जाता भरतविपिने सिञ्चति तरून् ।
मयादृष्टा सैषा प्रवहति सदा खण्डितगतिः
स्वदेशस्य स्नेहं प्रकटयति मुदा स्नेहपयसा ॥

१० हिमाद्रेर्निर्गत्य प्रविशति वनं तर्पणपरा
जनस्थाने लोकान्विविधबहुलाभं प्रकुरुते ।
त्रिवेणी तीर्थेऽस्मिन् हसति कुरुते नर्तनमपि
जलोर्मीणां नृत्यं सुखकरमहो सागरजले ॥

११ कृतः कुञ्जे वासः परमसुखदो रामकृपया
प्रवृद्धोऽस्यां स्नेहः सुरसरिति मे रामदयया ।
इयं गंगा मातुः प्रकटयति रागं प्रतिदिनं
चिताभस्म त्याज्यं सुरसरिति मेऽतो मृतिपरम् ॥

१२ विरिञ्चिपाण्यब्जविनिर्गता सा, पदब्जपूता गरुडासनस्य ।
अलंकृता मूर्ध्नि सदाशिवेन, पुण्या पताका सगरात्मजानाम् ॥

१३ गंगा नदी पूतजला त्रिमार्गगा, मन्दाकिनी भोगवती च जाह्नवी ।
विरिञ्चिनारायणरुद्रपूजिता, स्वर्गापवर्गाभयदा सुधा स्रवा ॥

१४ सत्सङ्गलाभं शिवपादपूजां, माघेऽसिते धर्मतिथौ समाप्य ।
द्विजो जगन्नाथस्वनामधन्यस्तृप्तिं परामाप सुकुञ्ज भृङ्गः ॥

१५ गंगा गीता च गायत्री, त्रिवर्गफलदायिनी ।
तनौ वाण्यां हृदि स्फीता, जगदानन्ददा भवेत् ॥

१६ धूम्रपानं परित्यज्य, बलभद्रप्रचोदितः ।
जीवन्मुक्तो जगन्नाथो, रामकुञ्जे बभूव ह ॥

राधाकान्त, सुदर्शनात्मजजगन्नाथेन संपादितो
नानाछन्दमयः सुरागभरितो निर्वाणवन्धशिवः
सोऽयं सज्जनमानसेषु नितरां शर्मप्रदो मोक्षदः ।
भूयान्नो जयदः सदा शिवमयः कामप्रदो भारते ॥

( श्री शिवार्पणमस्तु )

समाप्तम्



दास :
जगत्० रवि

